मुनिश्रीलावण्यविजयनिर्मित

# धातुरत्नाकर

# DHĀTURATNĀKARA

OF

MUNI-LĀVAṆYA VIJAYA

राष्ट्रिय-संस्कृत-संस्थान

नई दिल्ली

पुस्तकमिदं राष्ट्रियसंस्कृतसंस्थानस्य पुनर्मुद्रणयोजनायां प्रकाशितम्।

मुनिश्रीलावण्यविजयसूरिविनिर्मित

# धातुरत्नाकर

# DHĀTURATNĀKARA

OF

MUNI LĀVAṆYA VIJAYA SŪRI

द्वितीय भाग

णिगन्त प्रक्रिया

पुनरीक्षित संस्करण



राष्ट्रिय-संस्कृत-संस्थान

मानित विश्वविद्यालय

५६-५७, इन्स्टीट्यूशनल एरिया,

जनकपुरी, नई दिल्ली - ११००५८

प्रकाशक :

**प्रो. वेम्पटि कुटुम्ब शास्त्री**

कुलपति

**राष्ट्रिय-संस्कृत-संस्थान**

मानित विश्वविद्यालय

(मानवसंसाधन विकास मंत्रालय, भारत सरकार के अधीन)

५६-५७, इन्स्टीट्यूशनल एरिया,

जनक पुरी, नई दिल्ली - ११००५८

योजनासमन्यायक

**प्रो० आर. देवनाथन्**

प्राचार्य, (दिल्ली परिसर)

**डॉ० प्रकाशपाण्डेय**

सहायक निदेशक (शोध एवं प्रकाशन)

**द्वितीयं पुनर्मुद्रितसंस्करणम् : २००६**

**मूल्यम् : रूप्यकाणि १६६५.०० (१-५ भाग)**

मुद्रक:



**परिमल पब्लिकेशन्स**

27/28, शक्तिनगर

दिल्ली - 110007 (भारत)

अर्जुन सिंह
**ARJUN SINGH**



मानव संसाधन विकास मंत्री
भारत
नई दिल्ली ११० ००१
MINISTRY OF
HUMAN RESOURECE DEVELOPMENT INDIA
NEW DELHI- 110001

# सन्देश

संस्कृत साहित्य में अनेक ग्रन्थरत्न विद्यमान हैं जिनका पठन-पाठन एवं अनुसन्धान इस राष्ट्र में सहस्रों वर्षों से चला आ रहा है। वेद, शास्त्र, स्मृति एवं पुराण जैसे विशाल ग्रन्थ संस्कृत वाङ्मय का अंग हैं। यह वाङ्मय समय-समय पर प्रतिष्ठित विद्वानों द्वारा परिश्रम एवं आर्थिक व्यय से अंशतः प्रकाशित भी हुआ है। किन्तु समय के साथ इन ग्रन्थों की मुद्रित पुस्तकें छात्रों, विद्वानों एवं सामान्यजनों को दुर्लभ होने लगी हैं। अतः इन दुर्लभ सुसम्पादित ग्रन्थों का पुनर्मुद्रण कर न्यूनतम मूल्य पर उपलब्ध कराने की योजना मानव संसाधन विकास मंत्रालय एवं उसके अंगभूत राष्ट्रिय-संस्कृत-संस्थान के द्वारा कार्यान्वित की गयी है।

मैं आशा करता हूँ कि इस दूरगामी उपक्रम से संस्कृत के विद्वान्, छात्र एवं संस्कृतप्रेमी सामन्यजन लाभान्वित होंगे तथा संस्कृत के ज्ञान, वैभव का विस्तार होगा। साथ ही मैं यह भी कामना करता हूँ कि राष्ट्रिय-संस्कृत-संस्थान इस योजना में अन्य महत्वपूर्ण ग्रन्थों को भी प्रकाशित कर संस्कृत की श्रीवृद्धि करेगा।

(अर्जुन सिंह)

सर्वतन्त्रस्वतन्त्र-शासनसम्राट्-सूरिचक्रचक्रवर्त्ति जगद्गुरुतपागच्छाधिपति-भट्टारक

जन्म सं. १९२९ कार्तिक शु. १ मधुमती ( महुवा ) : दीक्षा सं. १९४५ ज्येष्ठ शु. ७ भावनगर



गणिपद सं. १९६० कार्त्तिक कृष्ण ७ वल्लभीपुर ( वळा ) : पन्न्यासपद सं. १९६० मागशर शु. ३ वल्लभीपुर ( वळा )

भव्याब्ध्यामदवृद्धिचन्द्रसदृशं, श्रीनेमिसूरीश्वरं ।
सम्यग्दर्शनबोधदानसदनं, चारित्रभानूदयम् ॥
जैनेन्द्रागमतत्त्वनन्दनघनं, लावण्ययोगालयं ॥
भो दक्षास्त्रिविधं हितं प्रणमत, प्रज्ञाप्रमोदक्षमम् ॥ १ ॥

आचार्य श्रीविजयनेमिसूरीश्वरः

सूरिपद सं. १९६४ ज्येष्ठ शु. ५ भावनगर

तपोगच्छाधिपति—सर्वतन्त्रस्वतन्त्र—शासनसम्राट्—सूरिचक्रचक्रवर्त्ति—जगद्गुरु—भट्टारकाचार्यवर्य—
श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कार—
व्याकरणवाचस्पति—शास्त्रविशारद—कविरत्न—निरुपमव्याख्यानसुधावर्षि—विबुधशिरोमणि—धातुरत्नाकर-
तिलकमञ्जरीटीकाद्यनेकग्रन्थप्रणेता—

जन्म—वि. सं. १९५३ भाद्रपद वद ५ दीक्षा—वि. सं. १९७२ अषाढ सुद ५ वडी दीक्षा—वि. सं. १९७३ मागशर
प्रवर्त्तकपद—वि. सं. १९८७ कार्तिक (प्रायः) बोटाद (काठीयावाड) ॥ सादडी (मारवाड) ॥
सुद ३ सादडी, (मारवाड) ॥ वद २, अमदावाद ॥



गणिपद—वि. सं. १९९० मागशर पंन्यासपद—वि. सं. १९९० मागशर उपाध्याय पद—वि. सं. १९९१ जेठ
आचार्यपद—वि. सं. १९९२ वैशाख सुद ८, भावनगर ॥ सुद १०, भावनगर ॥
वद १२, महुवा (काठीयावाड) ॥ सुद ४, अमदावाद ॥

## भट्टारकाचार्यश्रीमद्विजयलावण्यसूरीश्वरः ॥

"न्यायव्याकरणागमेषु ललिते, काव्ये तथा छन्दसि। साहित्यप्रभृतौ प्रबन्धगगने यद्धीकराः विस्तृताः॥
प्रत्युत्पन्नमतिः प्रसादमदनं, व्याख्यानवाचस्पतिः। सोऽयं दक्षप्रमोददो विजयते, लावण्यसूरीश्वरः॥१॥"

श्रीमज्जिनपुङ्गवेभ्यो नमः

सकलस्वपरसमयपारावारपारीण-तीर्थसंरक्षणप्रवण-विद्यापीठादिप्रस्थानपञ्चकसमाराधक-तपोगच्छाधिपति-भट्टारकाचार्यवर्य-परमगुरुश्रीमद्विजयनेमिसूरिभगवद्भ्यो नमः

**श्रीमत्तपोगणगगनाङ्गणगगनमणि-सार्वसार्वज्ञशासनसार्वभौम-तीर्थरक्षणपरायण-कोविदकुलालङ्कार-अखण्डविजयश्रीमद्गुरुराज-विजयनेमिसूरीश्वर-चरणारविन्दचञ्चरीकायमाणान्तिषन्मुनिलावण्यविजयप्रणीतो**

# धातुरत्नाकरः

**नत्वा श्रीनेमिनामान-माजन्मब्रह्मचारिणम्,**
**तीर्थनाथं गुरुं चैव भारतीं जिनभाषिताम्॥१॥**
**धातुरत्नाकरस्याहं लावण्यविजयो मुनिः,**
**भागं द्वितीयमातन्वे बालानां सुखहेतवे॥२॥**

पूर्वं पदस्य साक्षात्प्रकृतिरुदाहृतो गणाष्टकं यावत्तदनु नवमे मिश्रितः। केवलपरम्पराप्रकृतिस्त्वधुनोदाह्रियते। प्रयोक्तृव्यापारे णिग्। कर्त्तारं यः प्रयुङ्क्ते स प्रयोक्ता तद्व्यापारेऽभिधेये धातोर्णिग् वा भवति। व्यापारश्च प्रेषणाध्येषणनिमित्तभावाख्यानाभिनयज्ञानप्राप्तिभेदैरनेकधा। तत्र तिरस्कारपूर्वको व्यापारः प्रेषणम्। सत्कारपूर्वकस्त्वध्येषणम्। भवन्तं प्रयुङ्क्ते भावयति भावयते। कुर्वन्तं प्रयुङ्क्ते कारयति कारयते। अत्र प्रेषणोनाध्येषणेन वा यथासम्भवं प्रयोक्तृत्वम्। वासयति भिक्षा। अत्र निमित्तभावेन। राजानमागच्छन्तं प्रयुङ्क्ते राजानमागमयति। अत्राख्यानेन। आख्यानेनहि बुद्ध्यारूढा राजादयः प्रयुक्ताः प्रतीयन्ते। कंसं घ्नन्तं प्रयुङ्क्ते कंसं घातयति नटः। अत्राभिनयनेन। पुष्येण युञ्जन्तं प्रयुङ्क्ते पुष्येण योजयति चन्द्रम्। अत्र कालज्ञानेन। उज्जयिन्याः प्रदोषे प्रस्थितो माहिष्मत्यां सूर्यमुद्गच्छन्तं प्रयुङ्क्ते माहिष्मत्यां सूर्यमुद्गमयति। अत्र प्राप्त्या। ननु कर्त्ताऽपि करणादीनां प्रयोजक इति तद्व्यापारेऽपि णिगस्त्विति चेन्न प्रयोक्तृग्रहणसामर्थ्यात्तथाक्रियां कुर्वन्नेव कर्त्ताऽभिधीयते ते तूष्णीमासीने प्रयोज्ये मा पृच्छतु भवान् अनुयुङ्क्ते मां भवानित्यत्र णिग् न। पञ्चम्या बाधितत्वाद्वा। वाधिकार आबहुलवचनात्पक्षे वाक्यार्थः। णिगि भवन्तं प्रयुङ्क्ते भावयति करोतीत्यर्थः। यदाहुः

**नित्यं न भवनं यस्य यस्य वा नित्यभूतता।**
**न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव॥१॥**
**तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः।**
**प्रयोजकक्रियामाहु-र्भावनां भावनाविदः॥२॥**

इति भावयेज्ज्योतिरान्तरमित्यनेकार्थत्वाद् ध्यायेदित्यर्थः।

प्रयुङ्क्ते इति प्रयोक्ता प्रयोजकः, प्रयुज्यमानश्च क्रियाया योग्यो निर्वर्त्तको वा स च कर्तृवं नातिक्रामतीति सामर्थ्यात्कर्त्तुर्व्यापारयिता प्रयोक्तेत्याह-कर्त्तारमित्यादि। इदमिदानीं विचार्यते किं प्रयोक्तृव्यापारग्रहणं प्रकृव्यर्थस्य विशेषणं

प्रयोक्तृव्यापारविशिष्टेऽर्थे यो धातुर्वर्त्तते तस्मात्तद्द्योतको भवतीति, आहोस्वित्प्रत्ययस्य विशेषणं प्रयोक्तृव्यापारेऽभिधेय इति। अन्वयव्यतिरेकाभ्यां हि शास्त्रे प्रकृतिप्रत्यययोरर्थनिर्णयः, तौ चात्राव्यवस्थितौ, क्वचिद् णिगभावे प्रेषणादिप्रयोक्तृव्यापारो गम्यते यथा पञ्चभिर्हलैः कृषतीति क्वचिद् णिग्युत्पन्ने प्रेषणादेः प्रतिपत्तिः। यथा पाचयतीत्यतो यः संशयीत प्रकृत्यर्थविशेषणप्रत्ययार्थौ प्रति तस्य सन्देहापनोदार्थमाह-तद्व्यापारेऽभिधेय इति। प्रकृत्यर्थविशेषणे हि प्रयोज्यप्रयोजकयोर्व्यापारौ तुल्यकक्षतया धातुनाभिधीयेते-इति धातुवाच्यव्यापारसाम्यात्कर्त्रोरपि साम्यमिति द्वयोरपि तयोस्तिवादिनाभिधानं स्यादतश्च पाचयत्योदनं चैत्रेण मैत्र इति प्रयोक्तव्ये पाचयतश्चैत्रमैत्राविति स्यात्। णिक्प्रत्ययस्तु स्वार्थिकः स्वार्थिकाश्च द्विप्रकारा भवन्ति केचित्प्रकृत्यर्थविशेषकाः केचिन्निरर्थकास्तद्यथा शुक्लतर इति प्रकृत्यर्थमेव सातिशयं तरप् प्रकाशयति, यावक इति त्वनर्थको यावशब्देनैव स्वार्थस्य निर्भरमुक्तत्वाद् यावकशब्दस्तु कविभिः प्रयुक्त इत्यस्त व्युत्पत्तिराऽभ्यते तथैवायं प्रयोक्तृव्यापारविशिष्टधात्वर्थे विधीयमानोऽनर्थक एव। प्रत्ययार्थविशेषणपक्षे तु प्रेषणादेः प्रयोक्तृव्यापारस्य प्राधान्यात्तत्कर्त्तुरेवाभिधानं न्याय्यम्। इह च गमितो ग्रामं चैत्रो मैत्रेणेति गमिवाच्यस्यैवार्थस्य णिगन्तेन प्रतीतिर्नाधिकस्येति गत्यर्थाकर्मकेति कर्त्तरि क्तः स्यात् प्रयोजकव्यापारस्य गमिवाच्यत्वात् तस्य, प्रयोजके कर्त्तरि, क्तः स्यात् प्रयोज्यस्य तु कर्मत्वात्। तत्रैव च क्त इष्यते। तदुक्तम्, अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः। इह च व्यतिहिंसयन्त इति हिंसार्थस्यानतिरेकात् क्रियाव्यतिहार इत्यगितहिंसेते प्रतिषेधः स्यात्। प्रत्यार्थे तु प्रेषणादिरधिकोऽर्थ उपजायत इति नायं दोषः। तदैवं तत्र णिपक्षे पाचयत्योदनं चैत्रेण मैत्र इति प्रयोज्ये कर्त्तरि कर्मसंज्ञा स्यात् णिगर्थस्य प्राधान्यात् तद् व्यापारेण व्याप्यत्वात् तथा ग्रामं गमयति ग्रामाय गमयतीतिगत्यर्थस्य व्यतिरिक्तस्याप्राधान्याद् गतेर्नवानाप्त इति द्वितीयाचतुर्थ्यौ न स्याताम्। तथा एधोदकस्योपस्कारयतीति करोत्यर्थस्य व्यतिरिक्तत्वात् ''कृगः प्रतियत्न'' इति षष्ठी न स्यात् **एवमभिषावयति** परिषावयतीति क्रियान्तरयोगादभ्यादीनां सुनीतिं प्रत्यनुपसर्गत्वात् षत्वं न स्यात्। नैष दोषः। गम्यादयस्तावदन्तर्भूतग्रामादिसम्बद्धा एव प्रेषणेन सम्बध्यन्त इति तत्काल एवान्तरङ्गत्वाद् द्वितीयादिकार्योपपत्तिः। यच्च प्रोक्तं प्रयोज्यकर्त्तरि कर्मसंज्ञेति तत्र वाच्यम्, ''गतिबोधे'' ति नियमार्थत्वादेतेषामेव ण्यन्तानां कर्त्ता कर्मसंज्ञो भवति नान्येषाम्। प्रकृत्यर्थविशिष्टो हि प्रेषणादिर्णिगाभिधीयते तत्र धातुवाच्येऽर्थे प्रयोज्यः स्वतन्त्रःप्रेषणादिना आप्यमानस्तु कर्मसंज्ञाविषयतामापद्यते, तत्र किं धात्वर्थनिमित्तस्वातन्त्र्यसमाश्रयेण कर्तृसंज्ञास्ति उत प्रेषणादिना आप्यमानत्वात्कर्मसंज्ञेति विचारणायां प्रयोज्यव्यापारस्याप्राधान्यात् प्रधाने संस्कारप्रयोजके सम्भवति गुणः स्वसंस्कारं न प्रयुङ्क्ते इति प्रधानकर्मसंज्ञानिमित्तस्य कार्यस्य युक्तत्वान्नियमेन तु प्रधानप्रयुक्तकार्यव्यावृत्तौ गुणनिमित्तकार्यसद्भावात् कर्तृसंज्ञैवाप्रतिक्षिप्तस्वसंस्कारप्रयोजिकेति। किञ्चान्वयव्यतिरेकाभ्यां भूयोविषयाभ्यां प्रत्ययार्थविशेषणपक्षस्योपपन्नत्वम्, गम्यते हि व्यतिरिक्तमर्थान्तरं पचति पाचयतीति च। व्यापारश्चेत्यादिना व्यापारभेदानाह—तत्रेति, तेषु व्यापारभेदेषु प्रेरणादिष्वित्यर्थः। कुर्वन्तमित्यादिना कारयतीत्यादौ विग्रहं दर्शयति, अन्ये तु कुर्वन्तमन्योऽनुयुङ्क्ते कुर्विति विगृण्हन्ति, तत्केचिन्न क्षमन्ते, यतः प्रवृत्तक्रियस्य सम्भावितक्रियस्य वा नियोगे णिग्विधीयते पञ्चमी तु द्रव्यमात्रस्य आक्रम्य क्रियाणां विनियुज्यमानस्य। तदुक्तं हरिणा-द्रव्यमात्रस्य तु प्रैषे प्रच्छादेर्लोड् विधीयते। सक्रियस्य प्रयोगस्तु यदा स विषयो णिगः॥१॥ युक्तञ्चैवं स्वतन्त्रस्य प्रयोजको भवति स्वातन्त्र्यञ्चैतस्य प्रवृत्तक्रियत्वेन सम्भावितक्रियत्वेन वा यावन्नावगतं तावत्कथं तत्प्रयोजकं स्यात् तद्व्यापारे च कथं णिगुत्पद्येत पञ्चमी त्वाधीयमानकर्मकर्तृभावे द्रव्ये नियुज्यमानेऽतश्च पञ्चमीविषयस्य नियोगस्य णिग्विषयस्य भेदात् पञ्चम्या णिगोऽर्थदर्शनं न न्याय्यम्। किञ्चास्मादपि कारणादनयोर्नियोगयोर्भेदः। पञ्चमीविषयो हि नियोगः प्रयोक्तृधर्मः णिग्विषयस्तु, नियोगः क्वचित्प्रयोक्तृधर्मः क्वचिदभिधेयधर्मः कारयति कारयतीति।अन्ये तु भेदमपरामृश्योभावपि नियोगविषयाविति पञ्चम्या णिगोऽर्थं दर्शयन्ति तच्च न वाक्यस्य सर्वत्राभिन्नार्थत्वाद् तथा पचतीति पाचकः पचतीतिक्रिया

प्रधानं पाचक इति द्रव्यप्रधानम्। तस्मादिदमत्र वक्तव्यं करोति कश्चित् कुर्वन्तमन्यः प्रयुङ्क्ते इत्येतावतैव लघुना णिदर्थे प्रदर्शिते कैमर्थक्येन गुरुपञ्चम्याधिकं वाक्यं प्रदर्श्यत इति। अनयोरुदाहरणयोरत्रेत्यादिना यथा यथा प्रयोक्तृत्वं तथा दर्शयति। वासयतीति भिक्षेति क्तेट इत्यदन्तः। अध्यापयतीति। अधि पूर्वादिङो णिगि ''क्रीजीङ'' इत्यात्वम्। अर्त्तीति पोऽन्तः। अनयोः प्रयोक्तृत्वमाह-अत्र निमित्तभावेनेति, तत्र निमित्तभावः प्रयोज्यसम्पाद्यस्य व्यापारस्यातुच्छलानां वस्तूनां सम्पादनं तद्याचेतनेनापि भैक्षादिना सम्पाद्यमानं दृश्यते भिक्षा हि प्रचुरा व्यञ्जनवती लभ्यमाना वासस्यातुलानि तृप्त्यादीनि सम्पादयन्ती निमित्तभावात् प्रयोक्तृत्त्वमापद्यते। तथा कारीषोऽपि एकान्ते निर्वातप्रज्वलितोऽध्ययनस्य विरोधकं शीतं निवारयन् सुखस्पर्शञ्च सम्पादयंस्तथैव प्रयोजको भवति। नहि अवश्यं स एव वासं प्रयोजयति य आहोष्यतामिति किन्तु तूष्णीमप्यासीनो यस्तदतुच्छलेषु निमित्तत्वमुपयाति सोऽपि वासं प्रयोजयति। ननु किं भो वर्त्तमानकालाया एव क्रियायाः कर्त्रा भवितव्यं न भूतभविष्यत्कालायाः। नैव दोषः भूतभविष्यत्कालायामपि अभिसम्बन्धात्कर्त्रा भवितव्यम्। भूताया भविष्यन्त्याश्च क्रियायाः कर्त्रभिसम्बन्धो भूतो भावी च प्रतिपाद्यत इमां क्रियामकार्षीत् करिष्यतीति। राजान मागच्छन्तं प्रयुङ्क्ते राजानमागमयतीति। अथात्र राजागमनस्यान्यतो निमित्ताद्भावादाख्यातुरप्रयोजकत्वाद् णिग्न प्राप्नोतीति तत्र णिग्वक्तव्यः। तथा यदारण्यस्थो रममाणान् मृगान् प्रतिपाद्यमाचष्टे। एतस्मिन्नवकाश एव मृगा रमन्त इति तदास्य प्रतिपाद्यदर्शनार्था प्रवृत्तिर्भवति तस्याञ्च णिग् वक्तव्यः। यदा तु ग्रामे मृगरमणमाचष्टे तदा न भवति ग्रामे मृगाणामसम्भवात्र तद्दर्शनार्था प्रवत्तिः। मृगरमणादिविषयमेवैतद् द्रष्टव्यम्। राजागमनादिषु तु दृश्यर्थप्रवृत्त्यभावेऽपि णिग् भवति। तथा रात्रिं विवासयतीति यावद्रात्रेर्विवासोऽतिक्रमणं तावत्कथयतीति कालात्यन्तसंयोगेऽपि वक्तव्यः। आख्यातुरपि प्रयोक्तृत्वात् सामान्यलक्षणेनैव सिद्धत्वादित्याह-अत्राख्यानेनेति प्रयोक्तृत्वमितिशेषः। तदेव प्रयोक्तृत्वं दर्शयति-आख्यानेन हीत्यादि बुद्धिषु श्रोतृणां चित्तेषु रूढाः सत्तामापन्नाः प्रयुक्ताः प्रवर्त्तिताः प्रतीयन्ते। राजादीनां ह्युभयत्र भावो बहिरन्तश्च तत्राख्यात्रा बहिर्भावस्य कर्तुमशक्यत्वेऽपि अन्तर्भावस्य सुशक्यत्वाद् बहिष्प्रयोगाभावेऽपि अन्तःप्रयोगात्प्रयोक्तृत्वमिति। अयमर्थः यो न्याय्यो मुक्तसंशयः पाचयत्योदनं चैत्रो मैत्रेणेति स यथा तां क्रियां कुर्वन् प्रयोक्तृत्वेन प्रतीयमानः प्रयोक्तेति गृह्यते तथा मुक्तसंशयप्रयोजकवत्कथकोऽपि कथां कथयन् प्रयोक्तृत्वेन परेषां प्रतीतिमुत्पादयन् युक्तः प्रयोक्तेति ग्रहीतुमिति। एवं कंसं घ्नतं प्रयुङ्क्ते कंसं घातयतीत्यभिनयादिना नटादेः प्रयोक्तृत्वाविरोधः। यत्र शब्दप्रतिपाद्योऽर्थस्तत्रापि प्रयोक्तृत्वमस्त्ययं नटः कौशलात्तथा सरसमभिनयति येन कंसवधाय बलिबन्धनाय वा प्रवृत्तमेव नारायणं प्रयुङ्क्ते इति परेषां प्रतीतिर्भवतीति, नन्वस्य स्वतन्त्रस्य प्रयोजकः प्रयोक्ता भवति तत्कथं माहिष्मत्यां सूर्यमुद्गमयतीत्यत्र णिग्। नह्यसौ सूर्यं प्रयोजयतीति उच्यते। यं हि भवान् स्वतन्त्रस्य प्रयोजकं मुक्तसंशयं मन्यते। पाचयत्योदनं चैत्रो मैत्रणेत्येतदपि एतेन तुल्यम्। मैत्रे सूर्ये चोभयत्रापि किञ्चिदनपेक्षयैव प्रवृत्तेर्भावात्। नेह कश्चित् परोऽनुग्रहीतव्य इति प्रवर्त्तते सर्व इमे स्वभूत्यर्थं प्रवर्त्तन्ते येऽपि गुरुशुश्रूषवस्तेऽपि स्वभूत्यर्थं प्रवर्त्तन्ते पारलौकिकश्च नो भविष्यति इह च नः प्रीतो गुरुरध्यापयिष्यतीति ये चाप्येते कर्मकरा नाम तेऽपि स्वभूत्यर्थमेव प्रवर्त्तन्ते भक्तं चेलञ्च लप्स्यामहे परिभवाश्च दण्डादिका न नो भविष्यन्ति। तथा येऽपि शिल्पिनो नाम तेऽपि स्वभूत्यर्थं प्रवर्त्तन्ते वेतनं लप्स्यामहे मित्राणि नो भविष्यन्तीति। एवमेतेषु स्वभूत्यर्थं प्रवर्त्तमानेषु यदि कश्चित्कुर्वतः प्रयोजको भवति तेनैतदपि तुल्यम्। यद्येवं कः प्रयोज्यार्थः, अत्र भाष्यम्, यदभिप्रायेषु सज्जन्त इति ईदृश्यौ बध्नौ कुरु ईदृशौ पुटकौ कुर्विति सूर्यश्चाप्यस्याभिप्राये सज्जति। एष तस्याभिप्रायः शकुनाय सूर्योद्गमनं सम्भावयन्तं वास्याभिप्रायं निर्वर्त्तयति। तदुक्तं हरिणा-''निमित्तेभ्यः प्रवर्त्तन्ते सर्व एव स्वभूतयः''। अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये।।१।।'' इति नन्वस्त्वत्र णिग् कंसं घ्नन्तं प्रयुङ्क्ते इति तु वर्त्तमानकालता कथं कंसादीनां चिरहतत्वाच्चिरवृत्तो हि वध्यघातक भाव इति प्रयोजकव्यापारस्य वर्त्तमानत्वासम्भवादिति उच्यते। अत्रापि युक्ता वर्त्तमानता कथं ये तावत्कंसाद्यनुकारिणां नटानां व्याख्यानोपाध्यायाः

शौनकापरपर्यायास्त एते प्रत्यक्षं कंसं घातयन्ति बलिं बन्धयन्ति। कंसानुकारी हि नट: कंसबुद्ध्या सामाजिकैर्गृहीत इति कृत्वा कंस इत्युच्यते। चित्रेष्यप्युद्गूर्णा निपतिताश्च प्रहारा: कंसस्य कृष्णस्य च दृश्यन्ते। अथास्त्वत्र वर्त्तमानता ग्रन्थिकेषु तु कथकापरनामसु कथं यत्र शब्दमात्रं लक्ष्यते। उच्यते-तेऽपि हि तेषामुत्पत्तिप्रभृत्या विनाशाद्वृद्धीर्व्याचक्षाणा: सन्तो बुद्धिविषयांस्तान् कुर्वन्त: प्रत्यक्षतामापादयन्ति। तदुक्तं हरिणा-शब्दोपहितरूपाय बुद्धेर्विषयतां गतान्। प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते।।१।। इति अतश्चैतद्यतो व्यामिश्रा दृश्यन्ते केचिद्वासुदेवभक्ता भक्ता वर्णान्यत्वं पुष्यन्ति केचिद्रक्तमुखा भवन्ति केचित्कृष्णमुखा: त्रैकाल्यं खल्वपि लोके लक्ष्यते गच्छ हन्यते कंस: गच्छ घातिष्यते कंस: किं गतेन हत: कंस: तस्मादाख्यानाभिनयज्ञानप्राप्तिभिर्बुद्ध्यारूढा राजादय: प्रयुक्ता: प्रतीयन्ते तस्माद्राजागमनमाचष्टे। कंसवधमाचष्ट इत्यादि विवक्षायां तु प्रत्ययो नेष्यत एवेति। कर्त्तापि करणादिनि प्रयुञ्जान: प्रयोक्ता भवतीति प्रसङ्गं चोदयन्नाह-ननु चेत्यादित द्व्यापारेऽपीति कर्तृव्यापारेऽपीत्यर्थ:। परिहरन्नाह-नैवमित्यादिना प्रयोक्तृमात्रग्रहणे व्यापार इत्येव णिग्विधि: स्यात् किं प्रयोक्तृग्रहणेन तत्क्रियमाणं विशिष्टविषयं विज्ञायते यो लोके प्रयोक्तृत्वेन रूढ: स इह प्रयोक्ता कर्तुर्व्यापारयिता कर्त्ता तु करणादीन् प्रयुञ्जानोऽपि कर्तृतयैव प्रसिद्ध इति तद्व्यापारे णिग्न भवतीत्यर्थ:, प्रयोक्ता प्रयोज्य: कर्त्तापि च क्रियां प्रति सव्यापार एवोच्यते न निर्व्यापार इत्याह- तथेत्यादि तेनेत्यादिना तत्सिद्धं दर्शयति। अयमर्थ:। स्वतन्त्रस्य कर्त्तु: प्रयोजक: प्रयोक्तोच्यते। प्रयोज्यश्चात्र कर्त्ता न भवतीति तत्प्रयोजकोऽपि न प्रयोक्ता नह्यसौ सम्प्रति पृच्छति किन्तु तूष्णीमास्ते निर्व्यापारत्वात्कारकत्वमेव तस्य नास्ति कुतस्तद्विशेष: कर्तृत्त्वमिति कर्तृत्वमेव तस्याधीयमानमस्ति प्रश्नक्रियाया: कर्त्ता त्वं भव यथा, राजा त्वं भव राजत्वमेव तस्याधीयते। यश्च प्रवृत्तक्रिय: सम्भावितक्रियो वा प्रयोज्य: कर्त्ता तस्य प्रयोजक: प्रयोक्ता भवतीति तत्र णिग्भवत्येव। अथापि भवतु कर्तृत्वं तथापि न दोष इत्याह पञ्चम्या बाधितत्वादिति विधीयते हि द्रव्यमात्रस्य प्रैषादिषु पञ्चमी एवञ्चैकविषयत्वादुत्पन्नया पञ्चम्यैव प्रैषादेरभिहितत्वाद् णिग्न भवतीति अथवा सव्यापारेऽपि प्रयोज्ये परत्वात् 'प्रैषानुज्ञावसरे इति विहितया पञ्चम्या णिग्बाध्यते। प्रैषरूपे प्रयोक्तृव्यापारे णिक् पञ्चमी प्रैषविशिष्टे कर्त्तरि वाच्ये भवतीति समानविषयत्वं ततो णिग् बाध्यते। तर्हि मूलोदाहरणेष्वपि पञ्चमी। प्राप्नोति न। प्रेषणमात्रे णिगुक्त: पञ्चमी तु प्रेषणविशिष्टे कर्त्रादौ। यदा तु प्रेषणमात्रं विवक्ष्यते तदा णिग् तद्विशिष्टे तु कर्त्रादौ पञ्चमी कारयत्वित्यादौ प्रेषणस्यापि प्रेषणविवक्षा।। अथ कृष्यादिष्वनुत्पत्तिर्वक्तव्या एकान्ते तूष्णीमासीने उच्यते पञ्चभिर्हलै: कृषतीति कश्चिद्धि सामर्थ्यातिशयाद्युगपत् पञ्चभिर्हलै: कृषेत्पर्यायेण वेति तन्निराकरणायोच्यते एकान्ते तूष्णीमासीन इति तत्र पञ्चभिर्हलैर्भूमिमन्यै: कर्षयतीत्यर्थावगमाद् णिगि सति कृषतीति न प्राप्नोतीति तत्प्रतिषेधो वक्तव्य:। न वक्तव्यो नानाक्रिया कृषेरर्थ:। नावश्यं कृषिर्विलेखन एव वर्त्तते, किन्तर्हि प्रतिविधानेऽपि। यदसौ भक्तचीवरबलीवर्दै: प्रतिविधानं करोति स कृष्यर्थ: अनेकार्थत्वाद्धातूनां कृषिरेव प्रयोजकव्यापारे तत्समर्थाचरणलक्षणे वर्त्तते धातुनैव चोपपदसहितेन तस्यार्थस्य प्रकाशित्वाद् णिगभाव:। पदान्तरगम्ये चेति पक्षे आत्मनेपदाभावश्च। यदा तु कृषिर्विलेखन एव वर्त्तते तदा पञ्चभिर्हलै: कर्षयन्तीति भवत्येव णिग्। अतश्च प्रतिविधाने वर्त्तते यदहरेवासौ न प्रतिविधत्ते तदहरेव च तत् कर्म न प्रवर्त्तते। तथा पुष्यामित्रो यजते याजका याजयन्तीत्यादौ विपर्यासो वक्तव्य:। अत्र हि पुष्यामित्रो याजयते याजका यजन्तीति प्राप्नोति यजे: प्रक्षेपविशेषवाचित्वात्प्रक्षेपे च ऋत्विजां कर्तृत्वाद्यजमानस्य प्रयोजककर्तृत्वादिति अत्रापि नानाक्रियावचनत्वान्न भविष्यति नावश्यं यजिर्हविष्प्रक्षेपण एव वर्त्तते किं तर्हि त्यागेऽपि। अहो यजत इत्युच्यते य: सुष्ठु त्यागं करोति तञ्च पुष्यमित्र: करोति याजका: प्रयोजयन्ति। एवं त्यागवचनाश्रयेण य: प्रयोगस्तद्विपरीत: प्रक्षेपवचनेन भवतीत्यदोष:। वाधिकार इत्यादिना तस्य विकल्पार्थस्य प्रवृत्तेरवधिं दर्शयति।

## ॥ अथ णिगन्तप्रक्रिया॥

### १ भू सत्तायाम्।

#### परस्मैपद

| | | | |
|---|---|---|---|
| व. | भावयति | भावयतः | भावयन्ति |
| | भावयसि | भावयथः | भावयथ |
| | भावयामि | भावयावः | भावयामः |
| स. | भावयेत् | भावयेताम् | भावयेयुः |
| | भावयेः | भावयेतम् | भावयेत |
| | भावयेयम् | भावयेव | भावयेम |
| प. | भावयतु/भावयतात् | भावयताम् | भावयन्तु |
| | भावय/भावयतात् | भावयतम् | भावयत |
| | भावयानि | भावयाव | भावयाम |
| ह्य. | अभावयत् | अभावयताम् | अभावयन् |
| | अभावयः | अभावयतम् | अभावयत |
| | अभावयम् | अभावयाव | अभावयाम |
| अ. | अबीभवत् | अबीभवताम् | अबीभवन् |
| | अबीभवः | अबीभवतम् | अबीभवत |
| | अबीभवम् | अबीभवाव | अबीभवाम |
| प. | भावयाञ्चकार | भवयाञ्चक्रतुः | भावयाञ्चक्रुः |
| | भावयाञ्चकर्थ | भावयाञ्चक्रथुः | भावयाञ्चक्र |
| | भावयाञ्चकार/चकर | भावयाञ्चकृव | भावयाञ्चकृम |
| | भावयाम्बभूव/भावयामास | | |
| आ. | भाव्यात् | भाव्यास्ताम् | भाव्यासुः |
| | भाव्याः | भाव्यास्तम् | भाव्यास्त |
| | भाव्यासम् | भाव्यास्व | भाव्यास्म |
| श्व. | भावयिता | भावयितारौ | भावयितारः |
| | भावयितासि | भावयितास्थः | भावयितास्थ |
| | भावयितास्मि | भावयितास्वः | भावयितास्मः |
| भ. | भावयिष्यति | भावयिष्यतः | भावयिष्यन्ति |
| | भावयिष्यसि | भावयिष्यथः | भावयिष्यथ |
| | भावयिष्यामि | भावयिष्यावः | भावयिष्यामः |
| क्रि. | अभावयिष्यत् | अभावयिष्यताम् | अभावयिष्यन् |
| | अभावयिष्यः | अभावयिष्यतम् | अभावयिष्यत |
| | अभावयिष्यम् | अभावयिष्याव | अभावयिष्याम |

#### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | भावयते | भावयेते | भावयन्ते |
| | भावयसे | भावयेथे | भावयध्वे |
| | भावये | भावयावहे | भावयामहे |
| स. | भावयेत | भावयेयाताम् | भावयेरन् |
| | भावयेथाः | भावयेयाथाम् | भावयेध्वम् |
| | भावयेय | भावयेवहि | भावयेमहि |
| प. | भावयताम् | भावयेताम् | भावयन्ताम् |
| | भावयस्व | भावयेथाम् | भावयध्वम् |
| | भावयै | भावयावहै | भावयामहै |
| ह्य. | अभावयत | अभावयेताम् | अभावयन्त |
| | अभावयथाः | अभावयेथाम् | अभावयध्वम् |
| | अभावये | अभावयावहि | अभावयामहि |
| अ. | अबीभवत | अबीभवेताम् | अबीभवन्त |
| | अबीभवथाः | अबीभवेथाम् | अबीभवध्वम् |
| | अबीभवे | अबीभवावहि | अबीभवामहि |
| प. | भावयाञ्चक्रे | भावयाञ्चक्राते | भावयाञ्चक्रिरे |
| | भावयाञ्चकृषे | भावयाञ्चक्राथे | भावयाञ्चकृढ्वे |
| | भावयाञ्चक्रे | भावयाञ्चकृवहे | भावयाञ्चकृमहे |
| | भावयाम्बभूव/भावयामास | | |
| आ. | भावयिषीष्ट | भावयिषीयास्ताम् | भावयिषीरन् |
| | भावयिषीष्ठाः | भावयिषीयास्थाम् | भावयिषीढ्वम् भावयिषीध्वम् |
| | भावयिषीय | भावयिषीवहि | भावयिषीमहि |
| श्व. | भावयिता | भावयितारौ | भावयितारः |
| | भावयितासे | भावयितासाथे | भावयिताध्वे |
| | भावयिताहे | भावयितास्वहे | भावयितास्महे |
| भ. | भावयिष्यते | भावयिष्येते | भावयिष्यन्ते |
| | भावयिष्यसे | भावयिष्येथे | भावयिष्यध्वे |
| | भावयिष्ये | भावयिष्यावहे | भावयिष्यामहे |
| क्रि. | अभावयिष्यत | अभावयिष्येताम् | अभावयिष्यन्त |
| | अभावयिष्यथाः | अभावयिष्येथाम् | अभवायिष्यध्वम् |
| | अभावयिष्ये | अभावयिष्यावहि | अभावयिष्यामहि |

## ।। आदन्ता: षट्।।

## २ पां (पा) पाने।

### परस्मैपद

| | | | |
|---|---|---|---|
| व. | पाययति | पाययत: | पाययन्ति |
| | पाययसि | पाययथ: | पाययथ |
| | पाययामि | पाययाव: | पाययाम: |
| स. | पाययेत् | पाययेताम् | पाययेयु: |
| | पायये: | पाययेतम् | पाययेत |
| | पाययेयम् | पाययेव | पाययेम |
| प. | पाययतु/पाययतात् | पाययताम् | पाययन्तु |
| | पायय:/पाययतात् | पाययतम् | पाययत |
| | पाययानि | पाययाव | पाययाम |
| ह्य. | अपाययत् | अपाययताम् | अपाययन् |
| | अपायय: | अपाययतम् | अपाययत |
| | अपाययम् | अपाययाव | अपाययाम |
| अ. | अपीप्यत् | अपीप्यताम् | अपीप्यन् |
| | अपीप्य: | अपीप्यतम् | अपीप्यत |
| | अपीप्यम् | अपीप्याव | अपीप्याम |
| प. | पाययाञ्चकार | भवयाञ्चक्रतु: | पाययाञ्चक्रु: |
| | पाययाञ्चकर्थ | पाययाञ्चक्रथु: | पाययाञ्चक्र |
| | पाययाञ्चकार/चकर | पाययाञ्चकृव | पाययाञ्चकृम |
| | पाययाम्बभूव/पाययामास | | |
| आ. | पाय्यात् | पाय्यास्ताम् | पाय्यासु: |
| | पाय्या: | पाय्यास्तम् | पाय्यास्त |
| | पाय्यासम् | पाय्यास्व | पाय्यास्म |
| श्व. | पाययिता | पाययितारौ | पाययितार: |
| | पाययितासि | पाययितास्थ: | पाययितास्थ |
| | पाययितास्मि | पाययितास्व: | पाययितास्म: |
| भ. | पाययिष्यति | पाययिष्यत: | पाययिष्यन्ति |
| | पाययिष्यसि | पाययिष्यथ: | पाययिष्यथ |
| | पाययिष्यामि | पाययिष्याव: | पाययिष्याम: |
| क्रि. | अपाययिष्यत् | अपाययिष्यताम् | अपाययिष्यन् |
| | अपाययिष्य: | अपाययिष्यतम् | अपाययिष्यत |
| | अपाययिष्यम् | अपाययिष्याव | अपाययिष्याम |

### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | पाययते | पाययेते | पाययन्ते |
| | पाययसे | पाययेथे | पाययध्वे |
| | पायये | पाययावहे | पाययामहे |
| स. | पाययेत | पाययेयाताम् | पाययेरन् |
| | पाययेथा: | पाययेयाथाम् | पाययेध्वम् |
| | पाययेय | पाययेवहि | पाययेमहि |
| प. | पाययताम् | पाययेताम् | पाययन्ताम् |
| | पाययस्व | पाययेथाम् | पाययध्वम् |
| | पाययै | पाययावहै | पाययामहै |
| ह्य. | अपाययत | अपाययेताम् | अपाययन्त |
| | अपाययथा: | अपाययेथाम् | अपाययध्वम् |
| | अपायये | अपाययावहि | अपाययामहि |
| अ. | अपीप्यत | अपीप्येताम् | अपीप्यन्त |
| | अपीप्यथा: | अपीप्येथाम् | अपीप्यध्वम् |
| | अपीप्ये | अपीप्यावहि | अपीप्यामहि |
| प. | पाययाञ्चक्रे | पाययाञ्चक्राते | पाययाञ्चक्रिरे |
| | पाययाञ्चकृषे | पाययाञ्चक्राथे | पाययाञ्चकृढ्वे |
| | पाययाञ्चक्रे | पाययाञ्चकृवहे | पाययाञ्चकृमहे |
| | पाययाम्बभूव/पाययामास | | |
| आ. | पाययिषीष्ट | पाययिषीयास्ताम् | पाययिषीरन् |
| | पाययिषीष्ठा: | पाययिषीयास्थाम् | पाययिषीढ्वम्<br>पाययिषीध्वम् |
| | पाययिषीय | पाययिषीवहि | पाययिषीमहि |
| श्व. | पाययिता | पाययितारौ | पाययितार: |
| | पाययितासे | पाययितासाथे | पाययिताध्वे |
| | पाययिताहे | पाययितास्वहे | पाययितास्महे |
| भ. | पाययिष्यते | पाययिष्येते | पाययिष्यन्ते |
| | पाययिष्यसे | पाययिष्येथे | पाययिष्यध्वे |
| | पाययिष्ये | पाययिष्यावहे | पाययिष्यामहे |
| क्रि. | अपाययिष्यत | अपाययिष्येताम् | अपाययिष्यन्त |
| | अपाययिष्यथा: | अपाययिष्येथाम् | अपाययिष्यध्वम् |
| | अपाययिष्ये | अपाययिष्यावहि | अपाययिष्यामहि |

## ३ घ्रां (घ्रा) गन्धोपादाने।

### परस्मैपद

| | | | |
|---|---|---|---|
| व. | घ्रापयति | घ्रापयतः | घ्रापयन्ति |
| | घ्रापयसि | घ्रापयथः | घ्रापयथ |
| | घ्रापयामि | घ्रापयावः | घ्रापयामः |
| स. | घ्रापयेत् | घ्रापयेताम् | घ्रापयेयुः |
| | घ्रापयेः | घ्रापयेतम् | घ्रापयेत |
| | घ्रापयेयम् | घ्रापयेव | घ्रापयेम |
| प. | घ्रापयतु/घ्रापयतात् | घ्रापयताम् | घ्रापयन्तु |
| | घ्रापय/घ्रापयतात् | घ्रापयतम् | घ्रापयत |
| | घ्रापयाणि | घ्रापयाव | घ्रापयाम |
| ह्य. | अघ्रापयत् | अघ्रापयताम् | अघ्रापयन् |
| | अघ्रापयः | अघ्रापयतम् | अघ्रापयत |
| | अघ्रापयम् | अघ्रापयाव | अघ्रापयाम |
| अ. | अजिघ्रपत् | अजिघ्रपताम् | अजिघ्रपन् |
| | अजिघ्रपः | अजिघ्रपतम् | अजिघ्रपत |
| | अजिघ्रपम् | अजिघ्रपाव | अजिघ्रपाम |
| | अजिघ्रिपत् | अजिघ्रिपताम् | अजिघ्रिपन् इ. |
| प. | घ्रापयाञ्चकार | घ्रापयाञ्चक्रतुः | घ्रापयाञ्चक्रुः |
| | घ्रापयाञ्चकर्थ | घ्रापयाञ्चक्रथुः | घ्रापयाञ्चक्र |
| | घ्रापयाञ्चकार/चकर | घ्रापयाञ्चकृव | घ्रापयाञ्चकृम |
| | घ्रापयाम्बभूव/घ्रापयामास | | |
| आ. | घ्राप्यात् | घ्राप्यास्ताम् | घ्राप्यासुः |
| | घ्राप्याः | घ्राप्यास्तम् | घ्राप्यास्त |
| | घ्राप्यासम् | घ्राप्यास्व | घ्राप्यास्म |
| श्व. | घ्रापयिता | घ्रापयितारौ | घ्रापयितारः |
| | घ्रापयितासि | घ्रापयितास्थः | घ्रापयितास्थ |
| | घ्रापयितास्मि | घ्रापयितास्वः | घ्रापयितास्मः |
| भ. | घ्रापयिष्यति | घ्रापयिष्यतः | घ्रापयिष्यन्ति |
| | घ्रापयिष्यसि | घ्रापयिष्यथः | घ्रापयिष्यथ |
| | घ्रापयिष्यामि | घ्रापयिष्यावः | घ्रापयिष्यामः |
| क्रि. | अघ्रापयिष्यत् | अघ्रापयिष्यताम् | अघ्रापयिष्यन् |
| | अघ्रापयिष्यः | अघ्रापयिष्यतम् | अघ्रापयिष्यत |
| | अघ्रापयिष्यम् | अघ्रापयिष्याव | अघ्रापयिष्याम |

### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | घ्रापयते | घ्रापयेते | घ्रापयन्ते |
| | घ्रापयसे | घ्रापयेथे | घ्रापयध्वे |
| | घ्रापये | घ्रापयावहे | घ्रापयामहे |
| स. | घ्रापयेत | घ्रापयेयाताम् | घ्रापयेरन् |
| | घ्रापयेथाः | घ्रापयेयाथाम् | घ्रापयेध्वम् |
| | घ्रापयेय | घ्रापयेवहि | घ्रापयेमहि |
| प. | घ्रापयताम् | घ्रापयेताम् | घ्रापयन्ताम् |
| | घ्रापयस्व | घ्रापयेथाम् | घ्रापयध्वम् |
| | घ्रापयै | घ्रापयावहै | घ्रापयामहै |
| ह्य. | अघ्रापयत | अघ्रापयेताम् | अघ्रापयन्त |
| | अघ्रापयथाः | अघ्रापयेथाम् | अघ्रापयध्वम् |
| | अघ्रापये | अघ्रापयावहि | अघ्रापयामहि |
| अ. | अजिघ्रपत | अजिघ्रपेताम् | अजिघ्रपन्त |
| | अजिघ्रपथाः | अजिघ्रपेथाम् | अजिघ्रपध्वम् |
| | अजिघ्रपे | अजिघ्रपावहि | अजिघ्रपामहि |
| प. | घ्रापयाञ्चक्रे | घ्रापयाञ्चक्राते | घ्रापयाञ्चक्रिरे |
| | घ्रापयाञ्चकृषे | घ्रापयाञ्चक्राथे | घ्रापयाञ्चकृढ्वे |
| | घ्रापयाञ्चक्रे | घ्रापयाञ्चकृवहे | घ्रापयाञ्चकृमहे |
| | घ्रापयाम्बभूव/घ्रापयामास | | |
| आ. | घ्रापयिषीष्ट | घ्रापयिषीयास्ताम् | घ्रापयिषीरन् |
| | घ्रापयिषीष्ठाः | घ्रापयिषीयास्थाम् | घ्रापयिषीढ्वम् |
| | | | घ्रापयिषीध्वम् |
| | घ्रापयिषीय | घ्रापयिषीवहि | घ्रापयिषीमहि |
| श्व. | घ्रापयिता | घ्रापयितारौ | घ्रापयितारः |
| | घ्रापयितासे | घ्रापयितासाथे | घ्रापयिताध्वे |
| | घ्रापयिताहे | घ्रापयितास्वहे | घ्रापयितास्महे |
| भ. | घ्रापयिष्यते | घ्रापयिष्येते | घ्रापयिष्यन्ते |
| | घ्रापयिष्यसे | घ्रापयिष्येथे | घ्रापयिष्यध्वे |
| | घ्रापयिष्ये | घ्रापयिष्यावहे | घ्रापयिष्यामहे |
| क्रि. | अघ्रापयिष्यत | अघ्रापयिष्येताम् | अघ्रापयिष्यन्त |
| | अघ्रापयिष्यथाः | अघ्रापयिष्येथाम् | अघ्रापयिष्यध्वम् |
| | अघ्रापयिष्ये | अघ्रापयिष्यावहि | अघ्रापयिष्यामहि |

## ४ ध्मां (ध्मा) शब्दाग्निसंयोगयोः।

### परस्मैपद

| | | | |
|---|---|---|---|
| व. | ध्मापयति | ध्मापयतः | ध्मापयन्ति |
| | ध्मापयसि | ध्मापयथः | ध्मापयथ |
| | ध्मापयामि | ध्मापयावः | ध्मापयामः |
| स. | ध्मापयेत् | ध्मापयेताम् | ध्मापयेयुः |
| | ध्मापयेः | ध्मापयेतम् | ध्मापयेत |
| | ध्मापयेयम् | ध्मापयेव | ध्मापयेम |
| प. | ध्मापयतु/ध्मापयतात् | ध्मापयताम् | ध्मापयन्तु |
| | ध्मापय/ध्मापयतात् | ध्मापयतम् | ध्मापयत |
| | ध्मापयानि | ध्मापयाव: | ध्मापयाम |
| ह्य. | अध्मापयत् | अध्मापयताम् | अध्मापयन् |
| | अध्मापयः | अध्मापयतम् | अध्मापयत |
| | अध्मापयम् | अध्मापयाव | अध्मापयाम |
| अ. | अदिध्मपत् | अदिध्मपताम् | अदिध्मपन् |
| | अदिध्मपः | अदिध्मपतम् | अदिध्मपत |
| | अदिध्मपम् | अदिध्मपाव | अदिध्मपाम |
| प. | ध्मापयाञ्चकार | ध्मापयाञ्चक्रतुः | ध्मापयाञ्चक्रुः |
| | ध्मापयाञ्चकर्थ | ध्मापयाञ्चक्रथुः | ध्मापयाञ्चक्र |
| | ध्मापयाञ्चकार/चकर | ध्मापयाञ्चकृव | ध्मापयाञ्चकृम |
| | ध्मापयाम्बभूव/ध्मापयामास | | |
| आ. | ध्माप्यात् | ध्माप्यास्ताम् | ध्माप्यासुः |
| | ध्माप्याः | ध्माप्यास्तम् | ध्माप्यास्त |
| | ध्माप्यासम् | ध्माप्यास्व | ध्माप्यास्म |
| श्व. | ध्मापयिता | ध्मापयितारौ | ध्मापयितारः |
| | ध्मापयितासि | ध्मापयितास्थः | ध्मापयितास्थ |
| | ध्मापयितास्मि | ध्मापयितास्वः | ध्मापयितास्मः |
| भ. | ध्मापयिष्यति | ध्मापयिष्यतः | ध्मापयिष्यन्ति |
| | ध्मापयिष्यसि | ध्मापयिष्यथः | ध्मापयिष्यथ |
| | ध्मापयिष्यामि | ध्मापयिष्यावः | ध्मापयिष्यामः |
| क्रि. | अध्मापयिष्यत् | अध्मापयिष्यताम् | अध्मापयिष्यन् |
| | अध्मापयिष्यः | अध्मापयिष्यतम् | अध्मापयिष्यत |
| | अध्मापयिष्यम् | अध्मापयिष्याव | अध्मापयिष्याम |

### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | ध्मापयते | ध्मापयेते | ध्मापयन्ते |
| | ध्मापयसे | ध्मापयेथे | ध्मापयध्वे |
| | ध्मापये | ध्मापयावहे | ध्मापयामहे |
| स. | ध्मापयेत | ध्मापयेयाताम् | ध्मापयेरन् |
| | ध्मापयेथाः | ध्मापयेयाथाम् | ध्मापयेध्वम् |
| | ध्मापयेय | ध्मापयेवहि | ध्मापयेमहि |
| प. | ध्मापयताम् | ध्मापयेताम् | ध्मापयन्ताम् |
| | ध्मापयस्व | ध्मापयेथाम् | ध्मापयध्वम् |
| | ध्मापयै | ध्मापयावहै | ध्मापयामहै |
| ह्य. | अध्मापयत | अध्मापयेताम् | अध्मापयन्त |
| | अध्मापयथाः | अध्मापयेथाम् | अध्मापयध्वम् |
| | अध्मापये | अध्मापयावहि | अध्मापयामहि |
| अ. | अदिध्मपत | अदिध्मपेताम् | अदिध्मपन्त |
| | अदिध्मपथाः | अदिध्मपेथाम् | अदिध्मपध्वम् |
| | अदिध्मपे | अदिध्मपावहि | अदिध्मपामहि |
| प. | ध्मापयाञ्चक्रे | ध्मापयाञ्चक्राते | ध्मापयाञ्चक्रिरे |
| | ध्मापयाञ्चकृषे | ध्मापयाञ्चक्राथे | ध्मापयाञ्चकृढ्वे |
| | ध्मापयाञ्चक्रे | ध्मापयाञ्चकृवहे | ध्मापयाञ्चकृमहे |
| | ध्मापयाम्बभूव/ध्मापयामास | | |
| आ. | ध्मापयिषीष्ट | ध्मापयिषीयास्ताम् | ध्मापयिषीरन् |
| | ध्मापयिषीष्ठाः | ध्मापयिषीयास्थाम् | ध्मापयिषीढ्वम्<br>ध्मापयिषीध्वम् |
| | ध्मापयिषीय | ध्मापयिषीवहि | ध्मापयिषीमहि |
| श्व. | ध्मापयिता | ध्मापयितारौ | ध्मापयितारः |
| | ध्मापयितासे | ध्मापयितासाथे | ध्मापयिताध्वे |
| | ध्मापयिताहे | ध्मापयितास्वहे | ध्मापयितास्महे |
| भ. | ध्मापयिष्यते | ध्मापयिष्येते | ध्मापयिष्यन्ते |
| | ध्मापयिष्यसे | ध्मापयिष्येथे | ध्मापयिष्यध्वे |
| | ध्मापयिष्ये | ध्मापयिष्यावहे | ध्मापयिष्यामहे |
| क्रि. | अध्मापयिष्यत | अध्मापयिष्येताम् | अध्मापयिष्यन्त |
| | अध्मापयिष्यथाः | अध्मापयिष्येथाम् | अध्मापयिष्यध्वम् |
| | अध्मापयिष्ये | अध्मापयिष्यावहि | अध्मापयिष्यामहि |

## ५ ष्ठां (स्था) गतिनिवृत्तौ।

### परस्मैपद

| | | | |
|---|---|---|---|
| व. | स्थापयति | स्थापयतः | स्थापयन्ति |
| स. | स्थापयेत् | स्थापयेताम् | स्थापयेयुः |
| प. | स्थापयतु/स्थापयतात् | स्थापयताम् | स्थापयन्तु |
| ह्य. | अस्थापयत् | अस्थापयताम् | अस्थापयन् |
| अ. | अतिष्ठिपत् | अतिष्ठिपताम् | अतिष्ठिपन् |
| प. | स्थापयाञ्चकार | स्थापयाञ्चक्रतुः | स्थापयाञ्चक्रुः |
| आ. | स्थाप्यात् | स्थाप्यास्ताम् | स्थाप्यासुः |
| श्व. | स्थापयिता | स्थापयितारौ | स्थापयितारः |
| भ. | स्थापयिष्यति | स्थापयिष्यतः | स्थापयिष्यन्ति |
| क्रि. | अस्थापयिष्यत् | अस्थापयिष्यताम् | अस्थापयिष्यन् |

### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | स्थापयते | स्थापयेते | स्थापयन्ते |
| स. | स्थापयेत | स्थापयेयाताम् | स्थापयेरन् |
| प. | स्थापयताम् | स्थापयेताम् | स्थापयन्ताम् |
| ह्य. | अस्थापयत | अस्थापयेताम् | अस्थापयन्त |
| अ. | अतिष्ठिपत | अतिष्ठिपेताम् | अतिष्ठिपन्त |
| प. | स्थापयाञ्चक्रे | स्थापयाञ्चक्राते | स्थापयाञ्चक्रिरे |
| आ. | स्थापयिषीष्ट | स्थापयिषीयास्ताम् | स्थापयिषीरन् |
| श्व. | स्थापयिता | स्थापयितारौ | स्थापयितारः |
| भ. | स्थापयिष्यते | स्थापयिष्येते | स्थापयिष्यन्ते |
| क्रि. | अस्थापयिष्यत | अस्थापयिष्येताम् | अस्थापयिष्यन्त |

## ६ म्नां (म्ना) अभ्यासे।

### परस्मैपद

| | | | |
|---|---|---|---|
| व. | म्नापयति | म्नापयतः | म्नापयन्ति |
| स. | म्नापयेत् | म्नापयेताम् | म्नापयेयुः |
| प. | म्नापयतु/म्नापयतात् | म्नापयताम् | म्नापयन्तु |
| ह्य. | अम्नापयत् | अम्नापयताम् | अम्नापयन् |
| अ. | अमिम्नपत् | अमिम्नपताम् | अमिम्नपन् |
| प. | म्नापयाञ्चकार | म्नापयाञ्चक्रतुः | म्नापयाञ्चक्रुः |
| आ. | म्नाप्यात् | म्नाप्यास्ताम् | म्नाप्यासुः |
| श्व. | म्नापयिता | म्नापयितारौ | म्नापयितारः |
| भ. | म्नापयिष्यति | म्नापयिष्यतः | म्नापयिष्यन्ति |
| क्रि. | अम्नापयिष्यत् | अम्नापयिष्यताम् | अम्नापयिष्यन् |

### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | म्नापयते | म्नापयेते | म्नापयन्ते |
| स. | म्नापयेत | म्नापयेयाताम् | म्नापयेरन् |
| प. | म्नापयताम् | म्नापयेताम् | म्नापयन्ताम् |
| ह्य. | अम्नापयत | अम्नापयेताम् | अम्नापयन्त |
| अ. | अमिम्नपत | अमिम्नपेताम् | अमिम्नपन्त |
| प. | म्नापयाञ्चक्रे | म्नापयाञ्चक्राते | म्नापयाञ्चक्रिरे |
| आ. | म्नापयिषीष्ट | म्नापयिषीयास्ताम् | म्नापयिषीरन् |
| श्व. | म्नापयिता | म्नापयितारौ | म्नापयितारः |
| भ. | म्नापयिष्यते | म्नापयिष्येते | म्नापयिष्यन्ते |
| क्रि. | अम्नापयिष्यत | अम्नापयिष्येताम् | अम्नापयिष्यन्त |

## ७ दाम् (दा) दाने।

### परस्मैपद

| | | | |
|---|---|---|---|
| व. | दापयति | दापयतः | दापयन्ति |
| स. | दापयेत् | दापयेताम् | दापयेयुः |
| प. | दापयतु/दापयतात् | दापयताम् | दापयन्तु |
| ह्य. | अदापयत् | अदापयताम् | अदापयन् |
| अ. | अदीदपत् | अदीदपताम् | अदीदपन् |
| प. | दापयाञ्चकार | दापयाञ्चक्रतुः | दापयाञ्चक्रुः |
| आ. | दाप्यात् | दाप्यास्ताम् | दाप्यासुः |
| श्व. | दापयिता | दापयितारौ | दापयितारः |
| भ. | दापयिष्यति | दापयिष्यतः | दापयिष्यन्ति |
| क्रि. | अदापयिष्यत् | अदापयिष्यताम् | अदापयिष्यन् |

### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | दापयते | दापयेते | दापयन्ते |
| स. | दापयेत | दापयेयाताम् | दापयेरन् |
| प. | दापयताम् | दापयेताम् | दापयन्ताम् |
| ह्य. | अदापयत | अदापयेताम् | अदापयन्त |
| अ. | अदीदपत | अदीदपेताम् | अदीदपन्त |
| प. | दापयाञ्चक्रे | दापयाञ्चक्राते | दापयाञ्चक्रिरे |

| | | | |
|---|---|---|---|
| आ. | दापयिषीष्ट | दापयिषीयास्ताम् | दापयिषीरन् |
| श्व. | दापयिता | दापयितारौ | दापयितार: |
| भ. | दापयिष्यते | दापयिष्येते | दापयिष्यन्ते |
| क्रि. | अदापयिष्यत | अदापयिष्येताम् | अदापयिष्यन्त |

**।।इदन्ताश्चत्वार:।।**

## ८ जिं (जि) अभिभवे।

**परस्मैपद**

| | | | |
|---|---|---|---|
| व. | जापयति | जापयत: | जापयन्ति |
| | जापयसि | जापयथ: | जापयथ |
| | जापयामि | जापयाव: | जापयाम: |
| स. | जापयेत् | जापयेताम् | जापयेयु: |
| | जापये: | जापयेतम् | जापयेत |
| | जापयेयम् | जापयेव | जापयेम |
| प. | जापयतु/जापयतात् | जापयताम् | जापयन्तु |
| | जापय/जापयतात् | जापयतम् | जापयत |
| | जापयानि | जापयाव | जापयाम |
| ह्य. | अजापयत् | अजापयताम् | अजापयन् |
| | अजापय: | अजापयतम् | अजापयत |
| | अजापयम् | अजापयाव | अजापयाम |
| अ. | अजीजपत् | अजीजपताम् | अजीजपन् |
| | अजीजप: | अजीजपतम् | अजीजपत |
| | अजीजपम् | अजीजपाव | अजीजपाम |
| प. | जापयाञ्चकार | जापयाञ्चक्रतु: | जापयाञ्चक्रु: |
| | जापयाञ्चकर्थ | जापयाञ्चक्रथु: | जापयाञ्चक्र |
| | जापयाञ्चकार/चकर | जापयाञ्चकृव | जापयाञ्चकृम |
| | जापयाम्बभूव/जापयामास | | |
| आ. | जाप्यात् | जाप्यास्ताम् | जाप्यासु: |
| | जाप्या: | जाप्यास्तम् | जाप्यास्त |
| | जाप्यासम् | जाप्यास्व | जाप्यास्म |
| श्व. | जापयिता | जापयितारौ | जापयितार: |
| | जापयितासि | जापयितास्थ: | जापयितास्थ |
| | जापयितास्मि | जापयितास्व: | जापयितास्म: |
| भ. | जापयिष्यति | जापयिष्यत: | जापयिष्यन्ति |
| | जापयिष्यसि | जापयिष्यथ: | जापयिष्यथ |
| | जापयिष्यामि | जापयिष्याव: | जापयिष्याम: |
| क्रि. | अजापयिष्यत् | अजापयिष्यताम् | अजापयिष्यन् |
| | अजापयिष्य: | अजापयिष्यतम् | अजापयिष्यत |
| | अजापयिष्यम् | अजापयिष्याव | अजापयिष्याम |

**आत्मनेपद**

| | | | |
|---|---|---|---|
| व. | जापयते | जापयेते | जापयन्ते |
| | जापयसे | जापयेथे | जापयध्वे |
| | जापये | जापयावहे | जापयामहे |
| स. | जापयेत | जापयेयाताम् | जापयेरन् |
| | जापयेथा: | जापयेयाथाम् | जापयेध्वम् |
| | जापयेय | जापयेवहि | जापयेमहि |
| प. | जापयताम् | जापयेताम् | जापयन्ताम् |
| | जापयस्व | जापयेथाम् | जापयध्वम् |
| | जापयै | जापयावहै | जापयामहै |
| ह्य. | अजापयत | अजापयेताम् | अजापयन्त |
| | अजापयथा: | अजापयेथाम् | अजापयध्वम् |
| | अजापये | अजापयावहि | अजापयामहि |
| अ. | अजीजपत | अजीजपेताम् | अजीजपन्त |
| | अजीजपथा: | अजीजपेथाम् | अजीजपध्वम् |
| | अजीजपे | अजीजपावहि | अजीजपामहि |
| प. | जापयाञ्चक्रे | जापयाञ्चक्राते | जापयाञ्चक्रिरे |
| | जापयाञ्चकृषे | जापयाञ्चक्राथे | जापयाञ्चकृढ्वे |
| | जापयाञ्चक्रे | जापयाञ्चकृवहे | जापयाञ्चकृमहे |
| | जापयाम्बभूव/जापयामास | | |
| आ. | जापयिषीष्ट | जापयिषीयास्ताम् | जापयिषीरन् |
| | जापयिषीष्ठा: | जापयिषीयास्थाम् | जापयिषीढ्वम्<br>जापयिषीध्वम् |
| | जापयिषीय | जापयिषीवहि | जापयिषीमहि |
| श्व. | जापयिता | जापयितारौ | जापयितार: |
| | जापयितासे | जापयितासाथे | जापयिताध्वे |
| | जापयिताहे | जापयितास्वहे | जापयितास्महे |
| भ. | जापयिष्यते | जापयिष्येते | जापयिष्यन्ते |
| | जापयिष्यसे | जापयिष्येथे | जापयिष्यध्वे |
| | जापयिष्ये | जापयिष्यावहे | जापयिष्यामहे |

| | | | |
|---|---|---|---|
| क्रि. | अजापयिष्यत | अजापयिष्येताम् | अजापयिष्यन्त |
| | अजापयिष्यथाः | अजापयिष्येथाम् | अजापयिष्यध्वम् |
| | अजापयिष्ये | अजापयिष्यावहि | अजापयिष्यामहि |

## ९ ज्रिं (ज्रि) अभिभवे।

### परस्मैपद

| | | | |
|---|---|---|---|
| व. | ज्राययति | ज्राययतः | ज्राययन्ति |
| स. | ज्राययेत् | ज्राययेताम् | ज्राययेयुः |
| प. | ज्राययतु/ज्राययतात् | ज्राययताम् | ज्राययन्तु |
| ह्य. | अज्राययत् | अज्राययताम् | अज्राययन् |
| अ. | अजिज्रयत् | अजिज्रयताम् | अजिज्रयन् |
| प. | ज्राययाञ्चकार | ज्राययाञ्चक्रतुः | ज्राययाञ्चक्रुः |
| आ. | ज्राय्यात् | ज्राय्यास्ताम् | ज्राय्यासुः |
| श्व. | ज्रायथिता | ज्राययितारौ | ज्राययितारः |
| भ. | ज्राययिष्यति | ज्राययिष्यतः | ज्राययिष्यन्ति |
| क्रि. | अज्राययिष्यत् | अज्राययिष्यताम् | अज्राययिष्यन् |

### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | ज्राययते | ज्राययेते | ज्राययन्ते |
| स. | ज्राययेत | ज्राययेयाताम् | ज्राययेरन् |
| प. | ज्राययताम् | ज्राययेताम् | ज्राययन्ताम् |
| ह्य. | अज्राययत | अज्राययेताम् | अज्राययन्त |
| अ. | अजिज्रयत | अजिज्रयेताम् | अजिज्रयन्त |
| प. | ज्राययाञ्चक्रे | ज्राययाञ्चक्राते | ज्राययाञ्चक्रिरे |
| आ. | ज्राययिषीष्ट | ज्राययिषीयास्ताम् | ज्राययिषीरन् |
| श्व. | ज्राययिता | ज्राययितारौ | ज्राययितारः |
| भ. | ज्राययिष्यते | ज्राययिष्येते | ज्राययिष्यन्ते |
| क्रि. | अज्राययिष्यत | अज्राययिष्येताम् | अज्राययिष्यन्त |

## १० क्षिं (क्षि) क्षये।

### परस्मैपद

| | | | |
|---|---|---|---|
| व. | क्षाययति | क्षाययतः | क्षाययन्ति |
| स. | क्षाययेत् | क्षाययेताम् | क्षाययेयुः |
| प. | क्षाययतु/क्षाययतात् | क्षाययताम् | क्षाययन्तु |
| ह्य. | अक्षाययत् | अक्षाययताम् | अक्षाययन् |
| अ. | अचिक्षयत् | अचिक्षयताम् | अचिक्षयन् |
| प. | क्षाययाञ्चकार | क्षाययाञ्चक्रतुः | क्षाययाञ्चक्रुः |
| आ. | क्षाय्यात् | क्षाय्यास्ताम् | क्षाय्यासुः |
| श्व. | क्षाययिता | क्षाययितारौ | क्षाययितारः |
| भ. | क्षाययिष्यति | क्षाययिष्यतः | क्षाययिष्यन्ति |
| क्रि. | अक्षाययिष्यत् | अक्षाययिष्यताम् | अक्षाययिष्यन् |

### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | क्षाययते | क्षाययेते | क्षाययन्ते |
| स. | क्षाययेत | क्षाययेयाताम् | क्षाययेरन् |
| प. | क्षाययताम् | क्षाययेताम् | क्षाययन्ताम् |
| ह्य. | अक्षाययत | अक्षाययेताम् | अक्षाययन्त |
| अ. | अचिक्षयत | अचिक्षयेताम् | अचिक्षयन्त |
| प. | क्षाययाञ्चक्रे | क्षाययाञ्चक्राते | क्षाययाञ्चक्रिरे |
| आ. | क्षाययिषीष्ट | क्षाययिषीयास्ताम् | क्षाययिषीरन् |
| श्व. | क्षाययिता | क्षाययितारौ | क्षाययितारः |
| भ. | क्षाययिष्यते | क्षाययिष्येते | क्षाययिष्यन्ते |
| क्रि. | अक्षाययिष्यत | अक्षाययिष्येताम् | अक्षाययिष्यन्त |

## ११ इं (इ) गतौ।

### परस्मैपद

| | | | |
|---|---|---|---|
| व. | आययति | आययतः | आययन्ति |
| स. | आययेत् | आययेताम् | आययेयुः |
| प. | आययतु/आययतात् | आययताम् | आययन्तु |
| ह्य. | आययत् | आययताम् | आययन् |
| अ. | आयियत् | आयियताम् | आयियन् |
| प. | आययाञ्चकार | आययाञ्चक्रतुः | आययाञ्चक्रुः |
| आ. | आय्यात् | आय्यास्ताम् | आय्यासुः |
| श्व. | आययिता | आययितारौ | आययितारः |
| भ. | आययिष्यति | आययिष्यतः | आययिष्यन्ति |
| क्रि. | आययिष्यत् | आययिष्यताम् | आययिष्यन् |

### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | आययते | आययेते | आययन्ते |
| स. | आययेत | आययेयाताम् | आययेरन् |
| प. | आययताम् | आययेताम् | आययन्ताम् |
| ह्य. | आययत | आययेताम् | आययन्त |

| | | | |
|---|---|---|---|
| अ. | आयियत | आयियेताम् | आयियन्त |
| प. | आययाञ्चक्रे | आययाञ्चक्राते | आययाञ्चक्रिरे |
| आ. | आययिषीष्ट | आययिषीयास्ताम् | आययिषीरन् |
| श्व. | आययिता | आययितारौ | आययितार: |
| भ. | आययिष्यते | आययिष्येते | आययिष्यन्ते |
| क्रि. | आययिष्यत | आययिष्येताम् | आययिष्यन्त |

॥ षडुदन्ता:॥

## १२ दुं (दु) गतौ।

**परस्मैपद**

| | | | |
|---|---|---|---|
| व. | दावयति | दावयत: | दावयन्ति |
| स. | दावयेत् | दावयेताम् | दावयेयु: |
| प. | दावयतु/दावयतात् | दावयताम् | दावयन्तु |
| ह्य. | अदावयत् | अदावयताम् | अदावयन् |
| अ. | अदूदवत् | अदूदवताम् | अदूदवन् |
| प. | दावयाञ्चकार | दावयाञ्चक्रतु: | दावयाञ्चक्रु: |
| आ. | दाव्यात् | दाव्यास्ताम् | दाव्यासु: |
| श्व. | दावयिता | दावयितारौ | दावयितार: |
| भ. | दावयिष्यति | दावयिष्यत: | दावयिष्यन्ति |
| क्रि. | अदावयिष्यत् | अदावयिष्यताम् | अदावयिष्यन् |

**आत्मनेपद**

| | | | |
|---|---|---|---|
| व. | दावयते | दावयेते | दावयन्ते |
| स. | दावयेत | दावयेयाताम् | दावयेरन् |
| प. | दावयताम् | दावयेताम् | दावयन्ताम् |
| ह्य. | अदावयत | अदावयेताम् | अदावयन्त |
| अ. | अदूदवत | अदूदवेताम् | अदूदवन्त |
| प. | दावयाञ्चक्रे | दावयाञ्चक्राते | दावयाञ्चक्रिरे |
| आ. | दावयिषीष्ट | दावयिषीयास्ताम् | दावयिषीरन् |
| श्व. | दावयिता | दावयितारौ | दावयितार: |
| भ. | दावयिष्यते | दावयिष्येते | दावयिष्यन्ते |
| क्रि. | अदावयिष्यत | अदावयिष्येताम् | अदावयिष्यन्त |

## १३ द्रुं (द्रु) गतौ।

| | | | |
|---|---|---|---|
| व. | द्रावयति | द्रावयत: | द्रावयन्ति |
| स. | द्रावयेत् | द्रावयेताम् | द्रावयेयु: |
| प. | द्रावयतु/द्रावयतात् | द्रावयताम् | द्रावयन्तु |
| ह्य. | अद्रावयत् | अद्रावयताम् | अद्रावयन् |
| अ. | अदिद्रवत् | अदिद्रवताम् | अदिद्रवन् |
| प. | द्रावयाञ्चकार | द्रावयाञ्चक्रतु: | द्रावयाञ्चक्रु: |
| आ. | द्राव्यात् | द्राव्यास्ताम् | द्राव्यासु: |
| श्व. | द्रावयिता | द्रावयितारौ | द्रावयितार: |
| भ. | द्रावयिष्यति | द्रावयिष्यत: | द्रावयिष्यन्ति |
| क्रि. | अद्रावयिष्यत् | अद्रावयिष्यताम् | अद्रावयिष्यन् |

**आत्मनेपद**

| | | | |
|---|---|---|---|
| व. | द्रावयते | द्रावयेते | द्रावयन्ते |
| स. | द्रावयेत | द्रावयेयाताम् | द्रावयेरन् |
| प. | द्रावयताम् | द्रावयेताम् | द्रावयन्ताम् |
| ह्य. | अद्रावयत | अद्रावयेताम् | अद्रावयन्त |
| अ. | अदिद्रवत | अदिद्रवेताम् | अदिद्रवन्त |
| प. | द्रावयाञ्चक्रे | द्रावयाञ्चक्राते | द्रावयाञ्चक्रिरे |
| आ. | द्रावयिषीष्ट | द्रावयिषीयास्ताम् | द्रावयिषीरन् |
| श्व. | द्रावयिता | द्रावयितारौ | द्रावयितार: |
| भ. | द्रावयिष्यते | द्रावयिष्येते | द्रावयिष्यन्ते |
| क्रि. | अद्रावयिष्यत | अद्रावयिष्येताम् | अद्रावयिष्यन्त |

## १४ शुं (शु) गतौ।

**परस्मैपद**

| | | | |
|---|---|---|---|
| व. | शावयति | शावयत: | शावयन्ति |
| स. | शावयेत् | शावयेताम् | शावयेयु: |
| प. | शावयतु/शावयतात् | शावयताम् | शावयन्तु |
| ह्य. | अशावयत् | अशावयताम् | अशावयन् |
| अ. | अशूशवत् | अशूशवताम् | अशूशवन् |
| प. | शावयाञ्चकार | शावयाञ्चक्रतु: | शावयाञ्चक्रु: |
| आ. | शाव्यात् | शाव्यास्ताम् | शाव्यासु: |
| श्व. | शावयिता | शावयितारौ | शावयितार: |
| भ. | शावयिष्यति | शावयिष्यत: | शावयिष्यन्ति |
| क्रि. | अशावयिष्यत् | अशावयिष्यताम् | अशावयिष्यन् |

**आत्मनेपद**

| | | | |
|---|---|---|---|
| व. | शावयते | शावयेते | शावयन्ते |

| | | | |
|---|---|---|---|
| स. | शावयेत | शावयेयाताम् | शावयेरन् |
| प. | शावयताम् | शावयेताम् | शावयन्ताम् |
| ह्य. | अशावयत | अशावयेताम् | अशावयन्त |
| अ. | अशूशवत | अशूशवेताम् | अशूशवन्त |
| प. | शावयाञ्चक्रे | शावयाञ्चक्राते | शावयाञ्चक्रिरे |
| आ. | शावयिषीष्ट | शावयिषीयास्ताम् | शावयिषीरन् |
| श्व. | शावयिता | शावयितारौ | शावयितार: |
| भ. | शावयिष्यते | शावयिष्येते | शावयिष्यन्ते |
| क्रि. | अशावयिष्यत | अशावयिष्येताम् | अशावयिष्यन्त |

### १५ स्रुं (स्रु) गतौ।

#### परस्मैपद

| | | | |
|---|---|---|---|
| व. | स्रावयति | स्रावयत: | स्रावयन्ति |
| स. | स्रावयेत् | स्रावयेताम् | स्रावयेयु: |
| प. | स्रावयतु/स्रावयतात् | स्रावयताम् | स्रावयन्तु |
| ह्य. | अस्रावयत् | अस्रावयताम् | अस्रावयन् |
| अ. | असिस्रवत् | असिस्रवताम् | असिस्रवन् |
| प. | स्रावयाञ्चकार | स्रावयाञ्चक्रतु: | स्रावयाञ्चक्रु: |
| आ. | स्राव्यात् | स्राव्यास्ताम् | स्राव्यासु: |
| श्व. | स्रावयिता | स्रावयितारौ | स्रावयितार: |
| भ. | स्रावयिष्यति | स्रावयिष्यत: | स्रावयिष्यन्ति |
| क्रि. | अस्रावयिष्यत् | अस्रावयिष्यताम् | अस्रावयिष्यन् |

#### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | स्रावयते | स्रावयेते | स्रावयन्ते |
| स. | स्रावयेत | स्रावयेयाताम् | स्रावयेरन् |
| प. | स्रावयताम् | स्रावयेताम् | स्रावयन्ताम् |
| ह्य. | अस्रावयत | अस्रावयेताम् | अस्रावयन्त |
| अ. | असिस्रवत | असिस्रवेताम् | असिस्रवन्त |
| प. | स्रावयाञ्चक्रे | स्रावयाञ्चक्राते | स्रावयाञ्चक्रिरे |
| आ. | स्रावयिषीष्ट | स्रावयिषीयास्ताम् | स्रावयिषीरन् |
| श्व. | स्रावयिता | स्रावयितारौ | स्रावयितार: |
| भ. | स्रावयिष्यते | स्रावयिष्येते | स्रावयिष्यन्ते |
| क्रि. | अस्रावयिष्यत | अस्रावयिष्येताम् | अस्रावयिष्यन्त |

### १६ ध्रुं (ध्रु) स्थैर्ये च।

#### परस्मैपद

| | | | |
|---|---|---|---|
| व. | ध्रावयति | ध्रावयत: | ध्रावयन्ति |
| स. | ध्रावयेत् | ध्रावयेताम् | ध्रावयेयु: |
| प. | ध्रावयतु/ध्रावयतात् | ध्रावयताम् | ध्रावयन्तु |
| ह्य. | अध्रावयत् | अध्रावयताम् | अध्रावयन् |
| अ. | अदुध्रवत् | अदुध्रवताम् | अदुध्रवन् |
| प. | ध्रावयाञ्चकार | ध्रावयाञ्चक्रतु: | ध्रावयाञ्चक्रु: |
| आ. | ध्राव्यात् | ध्राव्यास्ताम् | ध्राव्यासु: |
| श्व. | ध्रावयिता | ध्रावयितारौ | ध्रावयितार: |
| भ. | ध्रावयिष्यति | ध्रावयिष्यत: | ध्रावयिष्यन्ति |
| क्रि. | अध्रावयिष्यत् | अध्रावयिष्यताम् | अध्रावयिष्यन् |

#### आत्मनेपद

| | | | |
|---|---|---|---|
| व. | ध्रावयते | ध्रावयेते | ध्रावयन्ते |
| स. | ध्रावयेत | ध्रावयेयाताम् | ध्रावयेरन् |
| प. | ध्रावयताम् | ध्रावयेताम् | ध्रावयन्ताम् |
| ह्य. | अध्रावयत | अध्रावयेताम् | अध्रावयन्त |
| अ. | अदुध्रवत | अदुध्रवेताम् | अदुध्रवन्त |
| प. | ध्रावयाञ्चक्रे | ध्रावयाञ्चक्राते | ध्रावयाञ्चक्रिरे |
| आ. | ध्रावयिषीष्ट | ध्रावयिषीयास्ताम् | ध्रावयिषीरन् |
| श्व. | ध्रावयिता | ध्रावयितारौ | ध्रावयितार: |
| भ. | ध्रावयिष्यते | ध्रावयिष्येते | ध्रावयिष्यन्ते |
| क्रि. | अध्रावयिष्यत | अध्रावयिष्येताम् | अध्रावयिष्यन्त |

### १७ षुं (सु) प्रसवैश्वर्ययो:।

#### परस्मैपद

| | | | |
|---|---|---|---|
| व. | सावयति | सावयत: | सावयन्ति |
| | सावयसि | सावयथ: | सावयथ |
| | सावयामि | सावयाव: | सावयाम: |
| स. | सावयेत् | सावयेताम् | सावयेयु: |
| | सावये: | सावयेतम् | सावयेत |
| | सावयेयम् | सावयेव | सावयेम |
| प. | सावयतु/सावयतात् | सावयताम् | सावयन्तु |
| | सावय/सावयतात् | सावयतम् | सावयत |

| | | | |
|---|---|---|---|
| | सावयानि | सावयाव | सावयाम |
| ह्य. | असावयत् | असावयताम् | असावयन् |
| | असावयः | असावयतम् | असावयत |
| | असावयम् | असावयाव | असावयाम |
| अ. | असूसवत् | असूसवताम् | असूसवन् |
| | असूसवः | असूसवतम् | असूसवत |
| | असूसवम् | असूसवाव | असूसवाम |
| प. | सावयाञ्चकार | सावयाञ्चक्रतुः | सावयाञ्चक्रुः |
| | सावयाञ्चकर्थ | सावयाञ्चक्रथुः | सावयाञ्चक्र |
| | सावयाञ्चकार/चकर | सावयाञ्चकृव | सावयाञ्चकृम |
| | सावयाम्बभूव/सावयामास | | |
| आ. | साव्यात् | साव्यास्ताम् | साव्यासुः |
| | साव्याः | साव्यास्तम् | साव्यास्त |
| | साव्यासम् | साव्यास्व | साव्यास्म |
| श्व. | सावयिता | सावयितारौ | सावयितारः |
| | सावयितासि | सावयितास्थः | सावयितास्थ |
| | सावयितास्मि | सावयितास्वः | सावयितास्मः |
| भ. | सावयिष्यति | सावयिष्यतः | सावयिष्यन्ति |
| | सावयिष्यसि | सावयिष्यथः | सावयिष्यथ |
| | सावयिष्यामि | सावयिष्यावः | सावयिष्यामः |
| क्रि. | असावयिष्यत् | असावयिष्यताम् | असावयिष्यन् |
| | असावयिष्यः | असावयिष्यतम् | असावयिष्यत |
| | असावयिष्यम् | असावयिष्याव | असावयिष्याम |

आत्मनेपद

| | | | |
|---|---|---|---|
| व. | सावयते | सावयेते | सावयन्ते |
| | सावयसे | सावयेथे | सावयध्वे |
| | सावये | सावयावहे | सावयामहे |
| स. | सावयेत | सावयेयाताम् | सावयेरन् |
| | सावयेथाः | सावयेयाथाम् | सावयेध्वम् |
| | सावयेय | सावयेवहि | सावयेमहि |
| प. | सावयताम् | सावयेताम् | सावयन्ताम् |
| | सावयस्व | सावयेथाम् | सावयध्वम् |
| | सावयै | सावयावहै | सावयामहै |
| ह्य. | असावयत | असावयेताम् | असावयन्त |
| | असावयथाः | असावयेथाम् | असावयध्वम् |
| | असावये | असावयावहि | असावयामहि |
| अ. | असूसवत | असूसवेताम् | असूसवन्त |
| | असूसवथाः | असूसवेथाम् | असूसवध्वम् |
| | असूसवे | असूसवावहि | असूसवामहि |
| प. | सावयाञ्चक्रे | सावयाञ्चक्राते | सावयाञ्चक्रिरे |
| | सावयाञ्चकृषे | सावयाञ्चक्राथे | सावयाञ्चकृढ्वे |
| | सावयाञ्चक्रे | सावयाञ्चकृवहे | सावयाञ्चकृमहे |
| | सावयाम्बभूव/सावयामास | | |
| आ. | सावयिषीष्ट | सावयिषीयास्ताम् | सावयिषीरन् |
| | सावयिषीष्ठाः | सावयिषीयास्थाम् | सावयिषीढ्वम्/ सावयिषीध्वम् |
| | सावयिषीय | सावयिषीवहि | सावयिषीमहि |
| श्व. | सावयिता | सावयितारौ | सावयितारः |
| | सावयितासे | सावयितासाथे | सावयिताध्वे |
| | सावयिताहे | सावयितास्वहे | सावयितास्महे |
| भ. | सावयिष्यते | सावयिष्येते | सावयिष्यन्ते |
| | सावयिष्यसे | सावयिष्येथे | सावयिष्यध्वे |
| | सावयिष्ये | सावयिष्यावहे | सावयिष्यामहे |
| क्रि. | असावयिष्यत | असावयिष्येताम् | असावयिष्यन्त |
| | असावयिष्यथाः | असावयिष्येथाम् | असावयिष्यध्वम् |
| | असावयिष्ये | असावयिष्यावहि | असावयिष्यामहि |

॥ ऋदन्ता नव॥

## १८ स्मृं (स्मृ) चिन्तायाम्।

परस्मैपद

| | | | |
|---|---|---|---|
| व. | स्मारयति | स्मारयतः | स्मारयन्ति |
| | स्मारयसि | स्मारयथः | स्मारयथ |
| | स्मारयामि | स्मारयावः | स्मारयामः |
| स. | स्मारयेत् | स्मारयेताम् | स्मारयेयुः |
| | स्मारयेः | स्मारयेतम् | स्मारयेत |
| | स्मारयेयम् | स्मारयेव | स्मारयेम |
| प. | स्मारयतु/स्मारयतात् | स्मारयताम् | स्मारयन्तु |

